ततस्तया सा गलमोटनपूर्वं विनाशिता। ततः क्षणं स्थित्वा स्वेष्टदेवतां हृदि स्मृत्वा ताम्बूलादि प्रगृह्य यावच्चलति तावच्छुकः प्राह। सिद्धिरस्तु शिवाः सन्तु तव पन्थानः। क्व गन्तव्यं इत्यादिवाक्यैः पृष्टा। सा च शुकवचने शकुनमिव ज्ञात्वा हृष्टा शुकं प्राह। हे शुक राजजनान्तरास्वादं विज्ञातुं चलितास्मि। शुक उवाच। युक्तमिदं कर्तव्यमेव। परं यदि दुःखं पतति तन्निन्दितं कुलस्त्रीणां। विपरीते पाते सति बुद्धिरस्ति न वा। यदि नास्ति तदा पराभवपदं भविष्यसि॥ यतः।

कौतुकान्वेषिणो नित्यं दुर्जना व्यसनागमे।
मासोपवासिनी यद्वद् वणिक्पुत्रकचग्रहे॥

तच्छ्रुत्वा ससंभ्रमं सा जगाद। किम् इदं भाषितं शुक। इति पप्रच्छ। सा तदा सार्द्धं पांशुलाभिः कृतादरा। स उवाच।

यदि ते कौतुकं सुभ्रु परार्थं गच्छ सुन्दरि।
स्थिरीभूय त्वया पश्चात् श्राव्येयं महती कथा॥

एवं शुकोक्तं श्रुत्वा कौतुकाकुलचेतसा यावत् सा निजगृह आसीनास्ति तावच्छुकः कथामाह॥

चन्द्रवती पुरी। तत्र भीमो नाम महाराजः। तत्र

च मोहनश्रेष्ठिसुतः सुधनो नाम। स तन्नगरवासिनो हरिदत्तस्य कलत्रं लक्ष्मीनाम्नीं रन्तुं समीहते। ततो मासोपवासिनीं पूर्णानाम्नीं प्रचुरैर्धनमानदानैः हरिदत्ते नगराद्बहिर्गते सति दूतीत्वेन स प्रेषयामास हरिदत्तस्य गृहे। सापि चाटूक्तिभिर्लक्ष्मीं प्रसन्नां चक्रे। प्रसन्नयाथ तया तयेत्युक्तं। यत् त्वं याचसे तत् करोमि। पूर्णयोक्तं। तर्हि ममाभिमतं नरं भज। तयोक्तं। कुलबधूनां नैतद्युज्यते। परं तु तवाग्रे यत् प्रतिपन्नं तत् करोमि। उक्तं च।

अद्यापि नोज्झति हरः किल कालकूटं।
कूर्मो बिभर्ति धरणीं खलु चात्मपृष्ठे।
अम्भोनिधिर्वहति दुःसहवाडवाग्निं।
अङ्गीकृतं सुकृतिनः परिपालयन्ति ॥

तच्छ्रुत्वा हृष्टा पूर्णा। एवमेवैतत्। ततस्तां लक्ष्मीं प्रविधाय प्रदोषे स्वगृहं निनाय। ततो मोहनश्रेष्ठिसुतः कथितवेलोपरि नागतः किंचित्कार्यवैयग्रेण। ततो लक्ष्म्या सकामयोक्तं। अन्यं नरं शीघ्रं समानय। ततः पूर्णया अत्याकुलितमूढ्या तत्पतिरेव समानीतः। स्वभर्तरि समानीते सा किं करोतु। किं गृहं यातु किं वान्यत् किंचित् करोतु। इति

विचारयतु भवती सपरिवारा। तयोक्तं। न जानीमः। त्वमेव कथय। शुक उवाच। यदि न जानासि ततो विपरीते पतिते कथं निर्वहसीति। तर्हि श्रूयतां। स आगच्छन्नेव स्वपतिरित्यभिज्ञातः। ततः कचग्राहं प्रगृह्य प्रोक्तः। हे शठ त्वं ममाग्र इति जल्पसि यत् त्वां विना ममान्या वल्लभा नास्ति। अधुना तु मया परीक्षितोऽसि मया ज्ञातश्चेति कोपं चक्रे। स च तां सुकोमलवचनैरनुनीय कष्टेन स्वगृहं निन्ये॥

इति कथां श्रुत्वा शुकेनोक्तां भयविस्मयकारिणीं
पुंश्चलीवृन्दसमायुक्ता प्रसुप्ता सा प्रभावती॥

इति शुकसप्ततिग्रन्थे शुकेन्द्रप्रोक्तं प्रथमं कथानकं॥

---

## अथ श्रीमहाभारते जम्बुकनीतिः॥

धृतराष्ट्र उवाच॥

कथं शान्त्वेन दानेन भेदैर्दण्डेन वा पुनः।
अमित्रः शक्यते हन्तुं तन्मे ब्रूहि यथातथं॥ १॥

कणिक उवाच॥

शृणु राजन् यथा वृत्तं वने निवसतः पुरा।

जम्बुकस्य महाराज नीतिशास्त्रार्थदर्शिनः ॥ २ ॥
अथ कश्चित् कृतप्रज्ञः शृगालः स्वार्थपण्डितः ।
सखिभिर्न्यवसत् सार्द्धं व्याघ्राखुवृकबभ्रुभिः ॥ ३ ॥
ते ऽपश्यन् विपिने तस्मिन् बलिनं मृगयूथपं ।
अशक्ता ग्रहणे तस्य ततो मन्त्रममन्त्रयन् ॥ ४ ॥

जम्बुक उवाच ॥

असकृद्यतितो ह्येष हन्तुं व्याघ्र वने त्वया ।
युवा वै जवसंपन्नो बुद्धिशाली न शक्यते ॥ ५ ॥
मूषिको ऽस्य शयानस्य चरणौ भक्षयत्वयं ।
अथैनं भक्षितैः पादैर्व्याघ्रो गृह्णातु वै ततः ॥ ६ ॥
[ततो वै भक्षयिष्यामः सर्वे मुदितमानसाः ॥]
जम्बुकस्य तु तद्वाक्यं तथा चक्रुः समाहिताः ।
मूषिकभक्षितैः पादैर्मृगं व्याघ्रो ऽवधीत् तदा ॥ ७ ॥
दृष्ट्वैवाचेष्टमानं तु भूमौ मृगकलेवरं ।
स्नात्वागच्छत भद्रं वो रक्षामीत्याह जम्बुकः ॥ ८ ॥
शृगालवचनात् ते ऽपि गताः सर्वे नदीं ततः ।
स चिन्तापरमो भूत्वा तस्थौ तत्रैव जम्बुकः ॥ ९ ॥
अथाजगाम पूर्वं तु स्नात्वा व्याघ्रो महाबलः ।
ददर्श जम्बुकं चैव चिन्ताकुलितमानसं ॥ १० ॥

व्याघ्र उवाच ॥

किं शोचसि महाप्राज्ञ त्वं नो बुद्धिमतां वरः ।
अशित्वा पिशितान्यद्य विहरिष्यामहे वयं ॥ ११ ॥

जम्बुक उवाच ॥

शृणु मे त्वं महाबाहो यद्वाक्यं मूषिकोऽब्रवीत् ।
धिग्बलं मृगराजस्य मयाद्यायं मृगो हतः ॥ १२ ॥
मद्बाहुबलमाश्रित्य तृप्तिमद्य गमिष्यति ।
गर्जमानस्य तस्यैवमतो भक्ष्यं न रोचये ॥ १३ ॥

व्याघ्र उवाच ॥

ब्रवीति यदि स ह्येवं काले ह्यस्मिन् प्रबोधितः ।
स्वबाहुबलमाश्रित्य हनिष्येऽहं वनेचरान् ॥ १४ ॥
खादिष्ये तत्र मांसानि इत्युक्त्वा प्रस्थितो वनं ॥ १५ ॥
एतस्मिन्नेव काले तु मूषिकोऽप्याजगाम ह ।
तमागतमभिप्रेत्य शृगालोऽप्यब्रवीद्वचः ॥ १६ ॥

जम्बुक उवाच ॥

शृणु मूषिक भद्रं ते नकुलो यदिहाब्रवीत् ।
मृगमांसं न खादेयं गरमेतन्न रोचते ॥ १७ ॥
मूषिकं भक्षयिष्यामि तद्भवान् अनुमन्यतां ।
तच्छ्रुत्वा मूषिको वाक्यं संत्रस्तः प्रगतो बिलं ॥ १८ ॥
ततः स्नात्वा स वै तत्र आजगाम वृको नृप ।
तमागतमिदं वाक्यमब्रवीज्जम्बुकस्तदा ॥ १९ ॥

मृगराजो हि संक्रुद्धो न ते साधु भविष्यति।
सकलत्रस्त्विहायाति कुरुष्व यदनन्तरं ॥ २० ॥
एवं संचोदितस्तेन जम्बुकेन तदा वृकः।
ततोऽवलुम्पनं कृत्वा प्रयातः पिशिताशनः ॥२१॥
एतस्मिन्नेव काले तु नकुलोऽप्याजगाम ह।
तमुवाच महाराज नकुलं जम्बुको वने ॥ २२ ॥
स्वबाहुबलमाश्रित्य निर्जितास्ते ऽन्यतो गताः।
मम दत्वा नियुद्धं त्वं भुङ्क्ष्व मांसं यथेप्सितं ॥ २३ ॥

नकुल उवाच ॥

मृगराजो वृकश्चैव बुद्धिमान् अपि मूषिकः।
निर्जिता यत् त्वया वीरास्तस्माद्वीरतरो भवान् ॥२४॥
न त्वयाप्युत्सहे योद्धुमित्युक्त्वा सोऽप्यपागमत् ॥२५॥

कणिक उवाच ॥

एवं तेषु प्रयातेषु जम्बुको हृष्टमानसः।
खादति स्म तदा मांसमेकः सन्मन्त्रनिश्चयात् ॥ २६ ॥
एवं समाचरन् नित्यं सुखमेधेत भूपतिः ॥ २७ ॥
भयेन भेदयेद्भीरुं शूरमञ्जलिकर्मणा।
लुब्धमर्थप्रदानेन समं न्यूनं तथौजसा ॥ २८ ॥

इति श्रीमहाभारते आदिपर्वणि जम्बुकनीतिः॥

---

अथ ब्रह्मपुराणे कण्डूपाख्यानं ॥

व्यास उवाच ॥

तस्मिन् क्षेत्रे मुनिश्रेष्ठाः सर्वसत्त्वसुखावहे ।
धर्मार्थकाममोक्षाणां फलदे पुरुषोत्तमे ॥ १ ॥
कण्डुर्नाम महातेजा ऋषिः परमधार्मिकः ।
सत्यवादी शुचिर्दान्तः सर्वभूतहिते रतः ॥ २ ॥
जितेन्द्रियो जितक्रोधो वेदवेदाङ्गपारगः ।
अवाप परमां सिद्धिमवाप्य पुरुषोत्तमं ॥ ३ ॥
अन्येऽपि तत्र संसिद्धा मुनयः संयतेन्द्रियाः ।
सर्वभूतहिता दान्ता जितक्रोधा विमत्सराः ॥ ४ ॥

मुनय ऊचुः ॥

कः स कण्डुः कथं नाम जगाम परमां गतिं ।
श्रोतुमिच्छामहे तस्य चरितं ब्रूहि सत्तम ॥ ५ ॥

व्यास उवाच ॥

शृणुध्वं मुनिशार्दूलाः कथां तस्य मनोरमां ।
प्रवक्ष्यामि समासेन मुनेस्तस्य विचेष्टितं ॥ ६ ॥
प्रसिद्धे गोमतीतीरे विजने सुमनोहरे ।
कन्दमूलफलैः पूर्णे समित्पुष्पकुशैः जलैः ॥ ७ ॥

कारण्डवचक्रहंसैः कूर्मैर्मद्गुभिरेव च ।
एतैश्चान्यैस्तथाकीर्णां समन्ताज्जलचारिभिः ॥ ८ ॥
तत्राश्रमपदं कण्डोर्बभौ वै मुनिसत्तमाः ।
नानाद्रुमलताकीर्णं नानामृगगणान्वितं ॥ ९ ॥
तपस्तेपे मुनिस्तत्र सुमहत् परमाद्भुतं ।
व्रतोपवासैर्नियमैः स्नानमौनसुसंयुतैः ॥ १० ॥
ग्रीष्मे पञ्चतपा भूत्वा वर्षासु सलिलेशयः ।
आर्द्रवासास्तु हेमन्ते तपस्तेपे सदा मुनिः ॥ ११ ॥
दृष्ट्वा तु तपसो वीर्यं मुनेस्तस्य सुविस्मिताः ।
बभूवुर्देवगन्धर्वाः सिद्धविद्याधरास्तथा ॥ १२ ॥
भूमिं तथान्तरीक्षं च दिवं च मुनिसत्तमाः ।
कण्डुः स तापयामास त्रैलोक्यं तपसो वशात् ॥१३॥
अहो तस्य परं धैर्यम् अहो तस्य परं तपः ।
इत्यब्रुवंस्तदा देवा दृष्ट्वा तं तपसि स्थितं ॥ १४ ॥
व्यग्रास्ते मन्त्रयामासुः शक्रेण सहितास्तदा ।
भयात् तस्य समुद्विग्नास्तपोविघ्नमभीप्सवः ॥ १५ ॥
ज्ञात्वा तेषामभिप्रायं शक्रस्त्रिभुवनेश्वरः ।
प्रम्लोचाख्यां वरारोहां रूपयौवनगर्वितां ॥ १६ ॥
सुमध्यमां सुदशनां पीनश्रोणिपयोधरां ।
सर्वलक्षणसंपन्नां प्रोवाच बलसूदनः ॥ १७ ॥

शक्र उवाच ॥
प्रम्लोचे गच्छ शीघ्रं त्वं यत्रासौ तपते मुनिः ।
विघ्नार्थं तस्य तपसः क्षोभयस्व च तं शुभे ॥ १८ ॥
प्रम्लोचोवाच ॥
तव वाक्यं सुरश्रेष्ठ करोमि सततं प्रभो ।
किंतु भयं ममैवात्र जीवितस्य च संशयः ॥ १९ ॥
बिभेमि तं मुनिश्रेष्ठं ब्रह्मचर्यव्रते स्थितं ।
दीप्ततेजसम् अत्युग्रं ज्वलनार्कसमप्रभं ॥ २० ॥
ज्ञात्वा मां च मुनिः क्रोधाद्विघ्नार्थं समुपागतां ।
कण्डुः परमतेजस्वी शापं दास्यति दुःसहं ॥ २१ ॥
उर्वशी मेनका रम्भा घृताची सुरता तथा ।
विश्वाची सहजन्मा च पूर्वचित्तिस्तिलोत्तमा ॥२२॥
अलम्बुषा मिश्रकेशी शशिलेखा च वामना ।
अन्याश्चाप्सरसः सन्ति रूपयौवनगर्विताः ॥ २३ ॥
सुमध्याश्चारुवदनाः पीनोन्नतपयोधराः ।
कामप्रचारकुशलास्तास्तत्र संनियोजय ॥ २४ ॥
व्यास उवाच ॥
तस्यास्तद्वचनं श्रुत्वा पुनराह शचीपतिः ।
शक्र उवाच ॥
तिष्ठन्तु नाम चान्यास्तास्त्वं त्वत्र कुशला शुभे ॥ २५ ॥

कामं वसन्तं वायुं च सहायार्थं ददामि ते ।
तैः सार्द्धं गच्छ सुश्रोणि यत्रास्ते स महामुनिः ॥ २६ ॥
व्यास उवाच ॥
शक्रस्य वचनं श्रुत्वा तदा सा चारुलोचना ।
जगामाकाशमार्गेण तैः सार्द्धमाश्रमं मुनेः ॥ २७ ॥
सा गत्वा तत्र रुचिरं ददर्श मुनिसत्तमाः ।
मुनिं तं दीप्ततपसमाश्रमस्थमकल्मषं ॥ २८ ॥
अपश्यत् सा वनं रम्यं तैः सार्द्धं नन्दनोपमं ।
पुण्यं पद्मवनोपेतं नानामृगगणाकुलं ॥ २९ ॥
सर्वत्र फलभाराढ्यान् सर्वत्र कुसुमोज्ज्वलान् ।
अपश्यत् पादपांश्चैव विहङ्गरुतह्लादितान् ॥ ३० ॥
आम्रान्आम्रातकान्भव्यान्नारिकेलान्सतिन्दुकान्
चूतान्विल्वांस्तथा रम्यान्पूरकांश्च मनोहरान् ॥ ३१ ॥
शालांस्तालांस्तमालांश्च सप्तपर्णांश्च चम्पकान् ।
भल्लातकान् आमलकान् हरीतकीर्विभीतकान् ॥
एतान् अन्यांश्च वृक्षान् वै सापश्यत् पृथुलोचना ।
फलिनः पुष्पितान् रम्यान् गन्धावहान् सुकोमलान्
चकोरैः शतपत्रैश्च भृङ्गराजैस्तथा शुकैः ।
कोकिलैः कलरवैश्च हारितैर्जीवजीवकैः ॥ ३४ ॥
प्रियपुत्रैश्चातकैश्च तथान्यैर्विविधैः खगैः ।

श्रोत्ररम्यं सुमधुरं कूजद्भिः परिवेष्टितान् ॥ ३५ ॥
सरांसि च मनोज्ञानि प्रसन्नसलिलानि च।
कुमुदैः पुण्डरीकैश्च आचितानि समन्ततः ॥ ३६ ॥
एवं दृष्ट्वा वनं रम्यं तैः सार्द्धं परमाद्भुतं।
इन्द्रेण प्रेषिता नेतुं तपस्तस्य महात्मनः ॥ ३७ ॥
प्रोवाच कामं वायुं च वसन्तं च द्विजोत्तमाः।
कुरुध्वं मम साहाय्यं सर्वे यूयं पृथक् पृथक् ॥ ३८ ॥
एवमुक्ता तदा सा तु तथेत्युक्ता सुरैस्ततः।
प्रत्युवाचाद्य यास्यामि यत्रासौ संस्थितो मुनिः ॥ ३९ ॥
अद्य तं देहयन्तारं प्रयुक्तेन्द्रियवाजिनं।
चलच्छास्त्रं चलद्रश्मिं करिष्यामि कुसारथिं ॥ ४० ॥
ब्रह्मा जनार्दनो वापि यदिवा नीललोहितः।
तथाप्यद्य करिष्यामि कामवाणाकृत्तान्तरं ॥ ४१ ॥
इत्युक्त्वा प्रजगामाथ यत्रासौ तिष्ठते मुनिः।
महातपःप्रभावेण प्रशान्तश्वापदाश्रमे ॥ ४२ ॥
सा पुंस्कोकिलमाधुर्यं नदीतीरे व्यवस्थिता।
स्तोत्रमल्लास्थिता तस्मिन्नगायत वराप्सराः ॥ ४३ ॥
तावद्वसन्तः सहसा वसन्तमकरोत् तदा।
कोकिलालापमधुरं काकलीकमनोहरं ॥ ४४ ॥
ववौ गन्धवहश्चैव मलयाद्रिनिकेतनः।

उच्चावचानि पुष्पाणि पातयन् वै पुनः पुनः ॥ ४५ ॥
पुष्पबाणधरश्चैव गत्वा तस्य समीपतः ।
मुनेः संक्षोभयामास कामस्तदास्य मानसं ॥ ४६ ॥
ततो गीतध्वनिं श्रुत्वा मुनिर्विस्मयमागतः ।
जगाम यत्र सा सुभ्रूः कामबाणप्रपीडितः ॥ ४७ ॥
दृष्ट्वा तामहसद्धृष्टो विस्मयोत्फुल्ललोचनः ।
भ्रष्टोत्तरीयो विकलः पुलकाञ्चितविग्रहः ॥ ४८ ॥

मुनिरुवाच ॥

कासि कस्यासि सुश्रोणि सुभगे चारुहासिनि ।
मनो हरसि मे सुभ्रु ब्रूहि सत्यं सुमध्यमे ॥ ४९ ॥

प्रम्लोचोवाच ॥

तव कर्मकरा चाहं पुष्पार्थं च समागता ।
आदेशं देहि मे क्षिप्रं किं करोमि तवाज्ञया ॥५०॥

व्यास उवाच ॥

श्रुत्वैवं वचनं तस्यास्त्यक्त्वा धैर्यं विमोहितः ।
आदाय हस्ते तां बालां प्रविवेश स्वमाश्रमं ॥५१॥
ततः कामश्च वायुश्च वसन्तश्च द्विजोत्तमाः ।
जग्मुर्यथागताः सर्वे कृतकृत्यास्त्रिविष्टपं ॥ ५२ ॥
शशंसुश्च हरिं गत्वा तस्यास्तथा विचेष्टितं ।
स्तुत्वा शक्रं ततो देवाः प्रीताः सुमनसोऽभवन् ॥५३॥

स च कण्डुस्तया सार्द्धं प्रविश्य निजमाश्रमं ।
आत्मनः परमं रूपं चकार मन्मथाकृति ॥ ५४ ॥
रूपयौवनसंपन्नमतीवसुमनोहरं ।
दिव्यालंकारसंयुक्तं वासवाकृतिसंनिभं ॥ ५५ ॥
दिव्यवस्त्रधरं कान्तं दिव्यस्रग्गन्धभूषितं ।
सर्वोपभोगसंपन्नं सहसा तपसो बलात् ॥ ५६ ॥
दृष्ट्वा सा तस्य तद्रूपं परं विस्मयमागता ।
अहोऽस्य तपसो वीर्यमित्युक्त्वा मुदिता बभौ ॥५७॥
स्नानं संध्यां जपं होमं स्वाध्यायं देवतार्चनं ।
व्रतोपवासनियमं ध्यानं च मुनिसत्तमाः ॥ ५८ ॥
त्यक्त्वा स रेमे मुदितस्तया सार्द्धमहर्निशं ।
मन्मथाविष्टहृदयो न बुबुधे तपःक्षयं ॥ ५९ ॥
संध्यां रात्रिं दिनं पक्षं मासमयनहायने ।
न बुबोध गतं कालं विषयासक्तमानसः ॥ ६० ॥
सा च तं कामविभवैर्विदग्धा रहसि द्विजाः ।
रमयामास सुश्रोणी प्रचारकुशला तदा ॥ ६१ ॥
एवं कण्डुस्तया सार्द्धं वर्षाणामधिकं शतं ।
अतिष्ठन्मुनिशार्दूलो ग्राम्यधर्मरतो मुनिः ॥ ६२ ॥
सा तं प्राह ततो विप्रं गन्तुमिच्छाम्यहं दिवं ।
प्रसीद सुमुखो ब्रह्मन् त्वमाज्ञां दातुमर्हसि ॥ ६३ ॥

तयैवमुक्तः स मुनिस्तस्यामासक्तमानसः ।
दिनानि कतिचिद्भद्रे स्थीयतामित्यभाषत ॥ ६४ ॥
एवमुक्ता ततस्तेन सार्धं वर्षशतं पुनः ।
बुभुजे विषयांस्तन्वी तेन सार्द्धं महात्मना ॥ ६५ ॥
पुनर्गते वर्षशते साधिके सा शुभानना ।
यामीत्याह दिवं ब्रह्मन् प्रणयात् स्मितशोभिनी ॥ ६६ ॥
उक्तास्तयैवं स मुनिरुपगृह्यायतेक्षणां ।
इहास्यतां क्षणं सुभ्रु चिरकालं गमिस्यसि ॥ ६७ ॥
तथा प्रणीता सुश्रोणी सह तेनर्षिणा पुनः ।
शतद्वयं किंचिदूनं वर्षाणामन्वतिष्ठत ॥ ६८ ॥
गमनाय महाभागो देवराजनिवेशनं ।
प्रोक्तः प्रोक्तस्तया तन्व्या स्थीयतामित्यभाषत ॥ ६९ ॥
तथा सा चारुसर्वाङ्गी दाक्षिण्येन च दक्षिणा ।
प्रोक्ता प्रोक्ता शापभयात् वेपन्ती न जहौ मुनिं ॥ ७० ॥
तया च रमतस्तस्य परमर्षेरहर्निशं ।
नवं नवमभूत् प्रेम मन्मथासक्तचेतसः ॥ ७१ ॥
एकदा तु त्वरायुक्तो निश्चक्रामोटजान्मुनिः ।
निष्क्रान्तमेव कुत्रेति गम्यते प्राह सा शुभा ॥ ७२ ॥
इत्युक्तः स तया प्राह परिवृत्तमहः शुभे ।
संध्योपास्तिं करिष्यामि क्रियालोपोऽन्यथा भवेत् ॥

ततः प्रहस्य मुदिता सा तं प्राह महामुनिं ।
किमद्य सर्वधर्मज्ञ परिवृत्तमहस्तव ॥ ७४ ॥

मुनिरुवाच ॥

प्रातस्त्वमागता भद्रे नदीतीरमिदं शुभं ।
मया दृष्टासि सुश्रोणि प्रविष्टा च ममाश्रमं ॥७५॥
इयं च वर्तते संध्या परिणाममहो गतं ।
अवहासः किमर्थोऽयं सद्भावः कथ्यतां मम ॥७६॥

प्रम्लोचोवाच ॥

प्रत्यूषस्यागता ब्रह्मन् सत्यमेतन्न ते मृषा ।
किन्त्वद्य तस्य कालस्य गतान्यब्दशतानि वै ॥७७॥

व्यास उवाच ॥

ततः स आगुषो विप्रस्तां पप्रच्छायतेक्षणां ।
कथ्यतां भीरु कः कालो गतो मे रमतस्त्वया ॥७८॥

प्रम्लोचोवाच ॥

सहोत्तराण्यतीतानि नव वर्षशतानि वै ।
मासाश्च षट् तथैव च समतीतं दिनत्रयं ॥ ७९ ॥

मुनिरुवाच ॥

सत्यं भीरु वदस्येतत् परिहासोऽथवा तव ।
दिनमेकमहं मन्ये त्वया सार्द्धमिहोषितं ॥ ८० ॥

प्रम्लोचोवाच ॥

वदिष्याम्यनृतं ब्रह्मन् कथमत्र तवान्तिके ।
विशेषेण च भवता पृष्टा धर्मानुवर्तिना ॥ ८१ ॥
व्यास उवाच ॥
निशम्य तद्वचस्तस्याः स मुनिर्द्विजसत्तमाः ।
धिक् त्वामित्यथोवाच विनिन्द्यात्मानमात्मना ॥८२॥
मुनिरुवाच ॥
तपांसि मम नष्टानि व्रतानि मेऽखिलानि च ।
हृतो विवेकः केनापि योषिन्मोहाय निर्मिता ॥८३॥
ऊर्मिषट्कातिगं ब्रह्म ज्ञेयमात्मजयेन मे ।
गतिरेषा हृता येन धिक् तं काममहाग्रहं ॥८४॥
व्यास उवाच ॥
विनिन्द्येत्थं स धर्मज्ञः स्वयमात्मानमात्मना ।
तामप्सरसमासीनामिदं वचनमब्रवीत् ॥ ८५ ॥
मुनिरुवाच ॥
गच्छ पापे यथाकामं यत् कार्यं तत् त्वया कृतं ।
देवराजस्य मत्क्षोभं कुर्वन्त्याभावचेष्टितैः ॥ ८६ ॥
न त्वां करोम्यहं भस्म क्रोधतीव्रेण वह्निना ।
कामभोगासक्तमना उषितोऽहं त्वया सह ॥ ८७ ॥
अथवा तव दोषः कः किं वा कुर्यामहं तव ।
ममैव दोषो नितरां येनाहमजितेन्द्रियः ॥ ८८ ॥

यथाशक्ति कृतार्थिन्या कृतो मत्तपसो व्ययः ।
त्वया नियुक्तया देवैर्मम योगबलार्दितैः ॥ ८९ ॥

व्यास उवाच ॥

यावदित्थं स विप्रर्षिरब्रवीत् तां सुमध्यमां ।
तावत् स्यन्दत्स्वेदजला सा बभूवातिवेपथुः ॥ ९० ॥
प्रवेपमानां सततं स्विन्नगात्रलतां स तां ।
गच्छ गच्छेति स क्रोधादुवाच मुनिसत्तमः ॥ ९१ ॥
सा तु निर्भर्त्सिता तेन विनिष्क्रम्य तदाश्रमात् ।
आकाशगामिनी स्वेदं ममार्ज तरुपल्लवैः ॥ ९२ ॥
वृक्षाद्वृक्षं ययौ बाला तदग्रारुणपल्लवैः ।
निर्ममार्ज च गात्राणि गलत्स्वेदजलानि च ॥ ९३ ॥
ऋषिणा यस्तदा गर्भस्तस्या देहे समाहितः ।
निर्जगाम सरोमा स स्वेदरूपात् तदङ्गतः ॥ ९४ ॥
सोऽथाप्यायितो गोभिः शतधा ववृधे शनैः ।
मारिषा नाम कन्याभूद्वृक्षाणां चारुलोचना ॥ ९५ ॥
अथ कालेन महता प्रवृद्धा सा शुभानना ।
प्रचेतसानां सा भार्या दक्षस्य जननी द्विजाः ॥ ९६ ॥

इति श्रीब्रह्मपुराणे गौतमीमाहात्म्ये स्वयंभ्वृषिसंवादे कण्डूपाख्यानं ॥

अथ

## ऋतुसंहारे निदाघवर्णना ॥

प्रचण्डसूर्यः स्पृहणीयचन्द्रमाः ।
सदावगाहक्षतवारिसंचयः ।
दिनान्तरम्योऽभ्युपशान्तमन्मथो ।
निदाघकालः समुपागतः प्रिये ॥ १ ॥
निशाः शशाङ्कक्षतनीलराजयः ।
क्वचिद्विचित्रं जलयन्त्रमन्दिरं ।
मणिप्रकाराः सरसं च चन्दनं ।
शुचौ प्रिये यान्ति जनस्य सेव्यतां ॥ २ ॥
सुवासितं हर्म्यतलं मनोरमं ।
प्रियामुखोच्छ्वासविकम्पितं मधु ।
सुतन्त्रि गीतं मदनस्य दीपनं ।
शुचौ निशीथेऽनुभवन्ति कामिनः ॥ ३ ॥
नितम्बबिम्बैः सुदुकूलमेखलैः ।
स्तनैः सहाराभरणैः सचन्दनैः ।
शिरोरुहैः स्नानकषायवासितैः ।
स्त्रियो निदाघं शमयन्ति कामिनां ॥ ४ ॥

नितान्तलाक्षारसरागलोहितैर् ।
नितम्बिनीनां चरणैः सुनूपुरैः ।
पदे पदे हंसरुतानुकारिभिर् ।
जनस्य चित्तं क्रियते समन्मथं ॥ ५ ॥
पयोधराश्चन्दनपङ्कशीतलास् ।
तुषारगौरार्पितहारशेखराः ।
नितम्बदेशाश्च सहेममेखलाः ।
प्रकुर्वते कस्य मनो न सोत्सुकं ॥ ६ ॥
समुद्गतस्वेदचिताङ्गसन्धयो ।
विमुच्य वासांसि गुरूणि सांप्रतं ।
स्तनेषु तन्वंशुकमुन्नतस्तना ।
निवेशयन्ते प्रमदाः सयौवनाः ॥ ७ ॥
सचन्दनाम्बुव्यजनोद्भवानिलैः ।
सहारयष्टिस्तनमण्डलार्पनैः ।
सवल्लकीकाकलिगीतनिःस्वनैः ।
प्रबुध्यते सुप्त इवाद्य मन्मथः ॥ ८ ॥
सितेषु हर्म्येषु निशासु योषितां ।
सुखप्रसुप्तानि मुखानि चन्द्रमाः ।
विलोक्य निर्यन्त्रणमुत्सुकश्चिरं ।
निशाक्षये याति ह्रियेव पाण्डुतां ॥ ९ ॥

असह्यवातोद्धतरेणुमण्डला ।
प्रचण्डसूर्यातपतापिता मही ।
न शक्यते द्रष्टुमपि प्रवासिभिः ।
प्रियावियोगानलदग्धमानसैः ॥ १० ॥
मृगाः प्रचण्डातपतापिता भृशं ।
तृषा महत्या परिशुष्कतालवः ।
वनान्तरे तोयमिति प्रधाविता ।
निरीक्ष्य भिन्नाञ्जनसन्निभं नभः ॥ ११ ॥
सविभ्रमैः सस्मितजिह्मवीक्षितैर् ।
विलासवत्यो मनसि प्रसङ्गिनां ।
अनङ्गसंदीपनमाशु कुर्वते ।
यथा प्रदोषाः शशिचारुभूषणाः ॥ १२ ॥
रवेर्मयूखैरभितापितो भृशं ।
विदह्यमानः पथि तप्तपांशुभिः ।
अवाक्फणो जिह्मगतिः श्वसन् मुहुः ।
फणी मयूरस्य तले निषीदति ॥ १३ ॥
तृषा महत्या हतविक्रमोद्यमः ।
श्वसन् मुहुर्दूरविदारिताननः ।
न हन्त्यदूरेऽपि गजान् मृगाधिपो ।
विलोलजिह्वश्चलिताग्रकेशरः ॥ १४ ॥

विशुष्ककण्ठोद्गतशीकराम्भसो ।
गभस्तिभिर्भानुमतोऽभितापिताः ।
प्रवृद्धतृष्णोपहता जलार्थिनो ।
न दन्तिनः केशरिणोऽपि बिभ्यति ॥ १५ ॥
हुताग्निकल्पैः सवितुर्मरीचिभिः ।
कलापिनः क्लान्तशरीरचेतसः ।
न भोगिनं घ्नन्ति समीपवर्तिनं ।
कलापचक्रेषु निवेशिताननं ॥ १६ ॥
सभद्रमुस्तं परिपाण्डुकर्दमं ।
सरः खनन्नायतपोत्रमण्डलैः ।
प्रदीप्तभासा रविणाभितापितो ।
वराहयूथो विशतीव भूतलं ॥ १७ ॥
विवस्वता तीक्ष्णतरांशुमालिना ।
सपङ्कतोयात् सरसोऽभितापितः ।
उत्प्लुत्य भेकस्तृषितस्य भोगिनः ।
फणातपत्रस्य तले निषीदति ॥ १८ ॥
समुद्धृताशेषमृणालजालकं ।
विखिन्नमीनं द्रुतभीतसारसं ।
परस्परोत्पीडनसंहतैर्गजैः ।
कृतं सरः सार्द्रविमर्दकर्दमं ॥ १९ ॥

रविप्रभोद्भिन्नशिरोमणिप्रभो ।
विलोलजिह्वाद्वयपीतमारुतः ।
विषाग्निसूर्यातपतापितः फणी ।
न हन्ति मण्डूककुलं तृषाकुलः ॥ २० ॥
सफेनलालावृतवक्त्रसंपुटं ।
विनिर्गतालोहितजिह्वमुन्मुखं ।
तृषाकुलं निःसृतमद्रिगह्वराद् ।
गवेषमाणं महिषीकुलं जलं ॥ २१ ॥
पटुतरवनदाहोत्प्लुष्टशस्यप्ररोहाः ।
परुषपवनवेगोत्क्षिप्तसंशुष्कपर्णाः ।
दिनकरपरितापात् क्षीणतोयाः समन्ताद् ।
विदधति भयमुच्चैर्वीक्ष्यमाणा वनान्ताः ॥ २२ ॥
श्वसिति विहगवृन्दः शीर्णपर्णद्रुमस्थः ।
कपिकुलमुपयाति क्लान्तमद्रेर्निकुञ्जं ।
भ्रमति गवययूथः सर्वतस्तोयमिच्छन् ।
शरभकुलमजिह्मं प्रोद्धरेदम्बु कूपात् ॥ २३ ॥
विकचनवकुसुम्भस्वच्छसिन्दूरभासा ।
प्रवणपवनवेगोद्भूतवेगेन तूर्णं ।
तरुविटपलताग्रालिङ्गनव्याकुलेन ।
दिशि दिशि परिदग्धा भूमयः पावकेन ॥ २४ ॥

ध्वनति पवनविद्धः पर्वतानां दरीषु ।
स्फुटति पटुनिनादः शुष्कवंशस्थलीषु ।
प्रसरति तृणमध्ये लब्धवृद्धिः क्षणेन ।
क्षपयति मृगयूथं प्रान्तलग्नो दवाग्निः ॥ २५ ॥
बहुतर इव जातः शाल्मलीनां वनेषु ।
स्फुटति कनकगौरः कोटरेषु द्रुमाणां ।
परिणतदलशाखादुत्पतत्याशु वृक्षाद् ।
भ्रमति पवनधूतः सर्वशोऽग्निर्वनान्ते ॥ २६ ॥
गजगवयमृगेन्द्रा वह्निसंततदेहाः ।
सुहृद इव समेता द्वन्द्वभावं विहाय ।
कृतवहपरिखेदादाशु निर्गत्य कक्षाद् ।
विपुलपुलिनदेशां निम्नगाम् आश्रयन्ते ॥ २७ ॥
कमलवनचिताम्बुः पाटलामोदरम्यः ।
सुखसलिलनिषेकः सेव्यचन्द्रांशुजालः ।
व्रजतु तव निदाघः कामिनीभिः समेतो ।
निशि सुललितगीतैर्हर्म्यपृष्ठे सुखेन ॥ २८ ॥

इति श्रीकालिदासकृतावृतुसंहारे निदाघवर्णना
समाप्ता ॥ १ ॥

## ॥ अथ धूर्तसमागमः ॥

॥ प्रस्तावना ॥

हर्षादम्भोजजन्मप्रभृतिदिविषदां संसदि प्रीतिमत्या।
स्वश्वा मौलौ पुरारेर्दुहितृपरिणये साक्षतं चुम्ब्यमाने।
तद्वक्त्रं मौलिवक्त्रे मिलितमिति भृशं वीक्ष्य चन्द्रः सहासः।
दृष्ट्वा तद्वक्त्रमाशु स्मितशुभगमुखः पातु वः पञ्चवक्त्रः॥

अपि च ॥

वक्त्राम्भोरुहि विस्मिताः स्तवकिता वक्षोरुहि स्फारिताः
श्रोणीसीमनि गुम्फिताश्चरणयोरक्ष्णोः पुनर्विस्तृताः
पार्वत्याः प्रतिगात्रचित्रगतयस्तन्वन्तु भद्राणि वः।
विद्धस्यान्तिकपुष्पसायकशरैरीशस्य दृग्भक्तयः॥

नान्यन्ते सूत्रधारः॥

यदद्य

नानायोधनिरुद्धनिर्जितसुरत्राणत्रसद्वाहिनी-।
नृत्यद्भीमकबन्धमेलकदलद्भूमिभ्रमद्भूधरः।
अस्ति श्रीनरसिंहदेवनृपतिः कर्णाटचूडामणिरू-।
दृप्यत्पार्थिवसार्थमौलिमुकुटन्यस्ताङ्घ्रिपङ्केरुहः॥

तस्योद्युक्तभुजप्रतापदहनज्वालानिरस्तापदो ।
राज्ञः सर्वगुणानुवादपदवीविद्योतनाचार्यकः ।
यो धीरेश्वरवंशमौलिमुकुटो दातावदाताशयस्-।
तस्य श्रीकविशेखरस्य कविता मच्चित्तमालम्बते ॥

तदनेन सकलसंगीतविशेषविद्योतनाभिनवभरतेन पुरमथनपदारविन्दद्वन्द्ववन्दारुकरपल्लवेन निखिलभाषोपभाषाशुभंभावुकसरस्वतीकण्ठाभरणेन अनवरतसोमरसास्वादकशायकण्ठकन्दलीनरीनृत्यमानमीमांसामहोत्सवेन रामेश्वरस्य पौत्रेण तत्रभवतः पवित्रकीर्तेर्धीरेश्वरस्यात्मजेन महाशासनश्रेणिशिखरग्रामत्यल्लीजन्मभूमिना कविशेखराचार्यज्योतिरीश्वरेण निजकुतूहलविरचितं धूर्तसमागमनाम प्रहसनमभिनेतुमादिष्टोऽस्मि । तस्य चादिष्टमवश्यमिदं मालतीमालेव मया शिरोधरणीयं ॥ तथा हि

कर्पूरन्ति सुधाद्रवन्ति कमलाह्लासन्ति हंसन्ति च ।
प्रालेयन्ति हिमालयन्ति करकासारन्ति हारन्ति च ।
त्रैलोक्याङ्गनरङ्गलङ्घिमगतिप्रागल्भ्यसंभाविताः ।
शीतांशोः किरणच्छटा इव जयन्त्येतर्हि तत्कीर्तयः ॥

अपि च ।

के नार्चिता दिविषदः कति न द्विजेशाः ।

संतर्पिता न कवयः कति पूजिता वा ।
के चार्थिनः प्रतिदिनं न कृताः कृतार्थास् ।
त्यागप्रसादपटुना कविशेखरेण ॥
तत् प्रेयसीमाहूय संगीतकमवतरामि ॥

नेपथ्याभिमुखमवलोक्य

आर्ये इतस्तावत् ।

प्रविश्य नटी ॥

अज्ज एसम्हि । आणवेदु अज्जो । को णिओओ पसाईकरीअदुत्ति ॥ *)

॥ सूत्रधारः ॥

आर्ये अपि न जानासि
यश्चत्वारि शतानि बन्धघटनालंकारभाञ्जि द्रुतं ।
श्लोकानां विदधाति कौतुकवशादेकाहमात्रे कविः ।
ख्यातः क्ष्मातलमण्डलेष्वपि चतुःषष्टेः कलाया निधिः ।
संगीतागमसागरो विजयते श्रीज्योतिरीशः कृती ॥
तद्विरचितं धूर्तसमागमनाम प्रहसनमभिनेतुमारब्धमिति गीयतां नाट्योचितं किंचित् ॥

॥ नटी ॥ सविनयं

---

*) आर्य एषास्मि । आज्ञापयत्वार्यः । को नियोगः प्रसादीक्रियतां इति ।

ग्राणविदु ग्रज्जो को एत्थ पबन्धे पह्माणो रसो जं उद्दिसिग्र गाइस्सं ॥ *)

॥ सूत्रधारः ॥

ननु प्रोत्फुल्लमालतीमकरन्दसान्द्रामोदमत्तमधुकरझङ्कारमुखरो वसन्तः संततोज्जृम्भितानङ्गशृङ्गार एव। तथा हि

विकसितनवमल्लीकुञ्जगुञ्जद्द्विरेफः।
कुसुमितसहकारश्रेणिनिर्यत्परागः।
प्रमुदितपिककण्ठप्रोच्छलन्मङ्गलश्री-।
ग्रपहरति मुनेरप्येष चेतो वसन्तः ॥

॥ नटी ॥

मलग्राणिलचालिग्रचूग्रवणो।
कलकण्ठिसराह्दिकामिग्रणो।
मग्ररन्दविमत्तसिलीमुहग्रो।
सुरहीकिदसव्वदिसामुहग्रो।
एसो वसन्तमासो मुणिग्रणसत्थस्स राग्ररह्दिदस्स।
उम्मूलिग्र गरुधीरं करेइ वम्महवसं हिग्रग्रं ॥ **)

इति। गीयते नेपथ्ये

---

*) ग्राज्ञपयत्वार्यः को ऽस्मिन् प्रबन्धे प्रधानरसो यमुद्दिश्य गास्यामि।

**) मलयानिलचालितचूतवनः। कलकण्ठस्वराहृतकामिजनः। मकरन्दविमत्तशिलीमुखकः। सुरभीकृतसर्वदिशामुखकः। एष वसन्तमासो

दण्डकमण्डलुमण्डितहस्तः ।
सुललिततिलकविभूषितमस्तः ।
अयमुपसर्पति जङ्गमलोभश्-।
चलकाशायपटार्पितशोभः ॥

अज्ज को एसो परिक्खलन्तणिद्धोअकसाअवसणो दण्डकुण्डिआहत्थो धुत्तो विअ इदो तदो विलोएन्तो दीसदि ॥ *)

॥ सूत्रधारः ॥

आर्ये। यः श्रूयते जनमुखात् तुरगक्रियावान्।
आचारधर्मरहितो गणिकाविलासी।
दीर्घोर्द्धपुण्ड्रककमण्डलुदण्डलक्ष्यः।
पुष्णाति विश्वनगरः किल दम्भमुग्रं ॥

तदेतस्य दर्शनं दूरत एवाहरणीयं ॥

इति निष्क्रान्तौ

॥ इति प्रस्तावना ॥

---

मुनिजनसार्थस्य रागरहितस्य। उन्मूल्य गुरुधैर्यं करोति मन्मथवशं हृदयं ॥

*) आर्य क एष परिस्खलन्निर्धौतकशायवसनो दण्डकुण्डिकाहस्तो धूर्त इव इतस्ततो विलोकयन् दृश्यते ॥

ततः प्रविशति यथानिर्दिष्टः स्नातकेनानुगम्यमानो विश्वनगरः ॥

॥ विश्वनगरः ॥ सनिर्वेदः।

हृदयकमलमध्ये निर्गुणो निष्प्रपञ्चस् ।
त्रिभुवनपतिरेको ध्यायते योगिभिर्यः ।
तमहमजरमाद्यं ज्ञानमात्रैकवेद्यं ।
मधुमथनमुदारं संततं चिन्तयामि ॥

॥ स्नातकः ॥

समन्तादवलोक्य स्वगतं

*) अहो रमणीअदा वसन्तस्स। जदो
उम्मीलन्तं पसूणं रइरसकुसला छप्पदा वम्महन्धा।
कन्तारङ्गाणुरत्ता महुरसभविअं साणुराअं पिवन्ति।
उग्गाअन्ति प्फुरन्ता तिहुअणजइणो कामराअस्स कित्तिं।
संवित्तिं हारअन्ता पिअअणविरहे कोइला कामिणीणं
अविअ। **)
जे कप्पूरं हरन्ता कमलवणसिरिं लोलअन्ता सहावं।
साहाओ कम्पअन्ता णिहुअणसुहआ चन्दणाणं वणाणं।

---

*) अहो रमणीयता वसन्तस्य। यतः। उन्मीलत्प्रसूनं रतिरसकुशलाः षट्पदा मन्मथान्धाः। कान्तारङ्गानुरक्ता मधुरसभवितं सानुरागं पिवन्ति। उद्गायन्ति स्फुरन्तस्त्रिभुवनजयिनः कामरागस्य कीर्तिं। संवित्तिं हारयन्तः प्रियजनविरहे कोकिलाः कामिनीनां॥

**) अपि च। ये कर्पूरं हरन्तः कमलवनश्रियं लोडयन्तः स्वभावं। शाखाः कम्पयन्तो निधुवनसुखदाश्चन्दनानां वनानां। ते कन्दर्पस्य मित्राणि

ते कन्दप्पस्स मित्ता रइतणुरमणीकेलिदप्पं कुणन्ता।
तेल्लोअं मोहअन्ता मलअसिहरिणोसीअला वान्ति वाआ

ता कधं एसो अइदूसहो वसन्तसमओ मए एक्कसरीरेण सहिदव्वो ॥

इति वैमनस्यं नाटयति

॥ विश्वनगरः ॥

स्नातकं निर्वर्ण्य

अये दुराचार कथमद्य चिन्ताभारनतकन्धरोऽन्यादृश इव दृश्यसे। तथा हि

निःश्वासे पीवरत्वं वपुषि सुतनुता शून्यता दृष्टिपाते।
वक्त्रेन्दौ धूसरत्वं गतिषु विधुरता चेतसि म्लानता च।
चेष्टा निवेद्यते ते यदधिकविकलं रूपमासादितस्त्वं।
तन्मन्ये पञ्चबाणस्तिरयति भवतो धीरतां पूर्वरूपां॥

॥ स्नातकः ॥

सलज्जमधोमुखः स्थित्वा

*)भअवं अदिलज्जाकरं क्खु एदं। ता ण जुत्तं तुम्ह पुरदो पआसिदुं ॥

---

रतितनुरमणीकेलिदर्पं कुर्वान्तस्। त्रैलोक्यं मोहयन्तो मलयशिखरिणः शीतला वान्ति वाताः॥ तत् कथं एष अतिदुःसहो वसन्तसमयो मया एकशरीरेण सोढव्यः।

*) भगवन्नतिलज्जाकरं खलु एतत्। तन्न युक्तं युष्माकं पुरतः प्रकाशयितुं।

॥ विश्वनगरः ॥

न दोषः स्वप्नाख्याने। तत् कथ्यतां ॥

॥ स्नातकः ॥ सप्रणयं

*) भअवं अज्ज मए महापहादे णअरपोक्खरिणीपरिसरे उवहसिदसुरणाअरीरूवसंपत्ती अणङ्गसेणा णाम वारविलासिणी विलोइदा। तदो पहुदि सव्वगदं तं ज्जेव पेक्खामि ॥

॥ विश्वनगरः ॥

सहस्ततालमुच्चैर्विहस्य

वत्स अद्य मयापि तत्रैव सुरतप्रिया नाम मासोपवासिनी दृष्टा। तामनुसंदधानोऽहमपि मर्मभेदिना कामबाणेन संदलित एव। तथा हि

आकाशे लिखितेव दिक्षु खचितेवाकीर्णरूपेव च।
दृक्पद्मप्रतिबिम्बितेव मनसि श्लिष्टेव बद्धेव च।
सा मच्चित्तसरोरुहे मधुकरीवात्यन्तभावोत्तरा।
कान्ता कान्तविलासवासवसतिः क्वास्तीति न ज्ञायते॥

ऊर्द्ध्वमवलोक्य

वत्स मध्याह्नमारूढो भगवान् सहस्रांशुः। तथा हि

---

*) भगवन्नद्य मया महाप्रभाते नगरपुष्करिणीपरिसरे उपहसितसुरनागरीरूपसंपत्तिरनङ्गसेना नाम वारविलासिनी विलोकिता। ततः प्रभृति सर्वगतां तामेव प्रेक्षे ॥

दिक्चक्रं मृगतृष्णया कवलितं व्योमापि भास्वत्कर-।
छायाभिस्फुरितं तुषानलकणप्रायाश्च भूरेणवः।
पान्थाः पल्वलसंकुलद्रुमलताकुञ्जोदरे शेरते।
मज्जत्कुञ्जरपानलोडितजलाः क्षुभ्यन्ति तोयाशयाः॥
तद्भिक्षाकरणार्थमत्रैव कमपि गृहमेधिनमनुसराव॥

इति परिक्रामतः

॥ स्नातकः ॥

अग्रतोऽवलोक्य

*)भो भअवं पेक्ख पेक्ख विहिदभअवन्तजणमुण्डसरिच्छबकुअरमहिसीखम्भसोहन्तचउस्सालं इदोतदोसंचरन्तबालगोवच्छसोहिदं पीणुत्तुङ्गत्थणालसपरिक्खलन्तमन्दसंचाररमणिज्जावासपरिसरसंचरन्तचेलिआसमूहं कस्स बि महाधणस्स वासभअणं विलोईअदि।**) भो भो णाअरा कस्स इदं वासभअणं॥

इति पठति। नेपथ्ये

लक्ष्मीविवर्तरसविघ्नितसर्वभोगः।
शश्वत्प्रकीर्णधनचिन्तितवीतनिद्रः।

---

*) भो भगवन् प्रेक्षस्व प्रेक्षस्व। विहितभगवज्जनमुण्डसदृशबकुतरमहिषीस्तम्भशोभमानचतुःशालं इतस्ततःसंचरद्बालगोवत्सशोभितं पीनोत्तुङ्गस्तनालसपरिस्खलन्मन्दसंचाररमणीयावासपरिसरसंचरच्चेटिकासमूहं कस्यापि महाधनस्य वासभवनं विलोक्यते॥

**) भो भो नागराः कस्येदं वासभवनं।

अग्राह्यनामकतया भुवि यः प्रसिद्धस्।
तस्यैतदाश्रमपदं पुरतो विभाति ॥

॥ स्नातकः ॥

अग्रतो गत्वा पुनः

भो भो णाअरा कस्स इदं वासभअणं ॥

इति पठति। पुनर्नेपथ्ये लक्ष्मीत्यादि

॥ विश्वनगरः ॥

आः क एष नामग्रहणे भवतो निर्बन्धः। अथवा यद्वा तद्वास्तु श्रूयतां। मृताङ्गारठक्कुरस्याश्रमोऽयं। वत्स अलं विलम्बेन। वासाभ्यन्तरं प्रविशाव ॥

इत्यावासप्रवेशं नाटयित्वा एकान्ते स्थितौ। ततः प्रविशति कश्मलवेशो मृताङ्गारः

॥ मृताङ्गारः ॥

व्ययशीलः कुबेरोऽपि कामं याति दरिद्रतां।
अपि प्राणाः प्रदातव्या नार्थिभ्यो धनिकैर्धनं ॥

॥ स्नातकः ॥ उपसृत्य

*)भो महाबम्हणा भअवन्तो विस्सणअरचरणा तुम्हाणं गेहे भिक्खं भुञ्जिदुं इछन्ति ॥

॥ मृताङ्गारः ॥ स्वगतं

अहो दुर्दैवमस्माकं यदेतान् सकलनगरीयाढ्यलोकान्

---

*) भो महाब्राह्मणा भगवन्तो विश्वनगरचरणा युष्माकं गेहे भिक्षां भोक्तुमिछन्ति ॥

विहाय मय्येव पतितो धूमकेतुः। तत् कः प्रतीकारो ऽद्य भविष्यति ॥

इति विचिन्त्य तावत् प्रकाशं सविनयं

स्थाने यस्य चरन्ति भैक्ष्यमनघाः स्नेहेन युष्मादृशः।
स स्यादच्युतमूर्तिसेवनवशाद्धन्यः पवित्रालयः।
किंत्वस्मत्प्रतिवेशिविप्रवनिता भ्रातृप्रसक्ताङ्गना।
दूती सप्रसवेति सूतकमतः स्थानान्तरं गम्यतां॥

॥ विश्वनगरः॥ स्वगतं

अहो दुरात्मनोऽस्य व्याजव्यवहारः। भवतु वा। तत् प्रबोधयामि।

प्रकाशं

आयुष्मन् यतीनामस्माकं कुतः सूतकदोषः। तथा च स्मृतिः

न वायुः स्पर्शदोषेण नाग्निर्दहनकर्मणा।
नापो मूत्रपुरीषाभ्यां नान्नदोषेण मस्करी॥

॥ मृताङ्गारः॥ सविनयं

भगवन् यद्यप्येवं तथापि न संभवति। पश्य
अनावृष्ट्या कृषिर्नष्टा राष्ट्रभङ्गाद्रणादिकं।
वाणिज्यमल्पलाभेन प्रातराशस्य का कथा॥

॥ स्नातकः॥ सक्रोधं संस्कृतमाश्रित्य

धिङ् मौर्ख्यं जलधिसुतायाः श्रियः ।
नो जानाति कुलीनमुत्तमगुणं सत्त्वान्वितं धार्मिकं।
नाचारप्रवणं न कार्यकुशलं न प्रज्ञयालंकृतं ।
नीचं क्रूरमपेतसत्त्वहृदयं यस्मादियं सेवते ।
तत् त्वं सानुगुणः पयोधिसुतया लक्ष्म्या प्रमाणीकृतः॥

*) अरे णट्ठपरलोआ दुट्ठबम्हणा ईदिसे दूसहमज्झण्हे पठमं तुमं महाधणं भेक्खिअ कुदो अण्णदो गदुअ अम्हेहिं भिक्खा पत्थिदव्वा ।

॥ मृताङ्गारः ॥

भगवन्नस्मदावासोत्तरे सुरतप्रिया नाम मातोपवासिनी प्रतिवसति। तत्र गम्यतां ॥

इत्यभिधाय सत्वरं परिक्रान्तः

॥ विश्वनगरः ॥

यद्येवं ततः समीहितमेव नः संपन्नं। तदेहि तत्रैव गच्छाव ॥

इति परिक्रामतः ॥ स्नातकः ॥ पुरोऽवलोक्य गन्धमाघ्राय

**) भअवं पेक्ख पेक्ख एकाङ्गिआमुत्थमेत्तिआ-

---

*) अरे नष्टपरलोक दुष्टब्राह्मणा ईदृशे दुःसहमध्याह्ने प्रथमं त्वां महाधनं भिक्षित्वा कुतोऽन्यतो गत्वा अस्माभिर्भिक्षा प्रार्थयितव्या॥

**) भगवन् प्रेक्षस्व प्रेक्षस्व एकाङ्गिकामुस्तमात्रिकासंयुक्तमहाकन्दकुष्ठपरिमलोद्गारोऽग्रिमभवनादेनां सेवते। तदेतदेव सुरतप्रियाया वासभवनं॥

संत्नुत्तमह्लाह्लन्दकुठ्ठपरिमलुग्गारोग्रग्गिमभवणादो णं सेवदि। ता एदं ज्जेव सुरतप्पिग्राए वासभवणं॥

॥ विश्वनगरः॥

विदग्धैव किल मासोपवासिनीति किंवदन्ती। तदागच्छोपसर्पाव॥

इत्येकान्ते स्थितौ। ततः प्रविशति सुरतप्रिया

॥ सुरतप्रिया॥

*) धम्मो ण इठ्ठो बहुदुक्खचेठ्ठो।
मोक्खेण सोक्खं मम ग्रत्थि सच्चं।
ग्रत्थो समत्थो सग्रलं विधाडुं।
ग्रणङ्गसव्वस्सकलाणिह्लाणं॥

॥ स्नातकः॥ उपसृत्य

**) ग्रज्जे विस्सणग्ररो तुम्ह्लाणं ग्रदिधी उग्रत्थिदो॥

॥ सुरतप्रिया॥ परिक्रम्यावलोक्य च

***) ता उग्रसप्पामि। उपसृत्य। भग्रवं पणामामि॥

॥ विश्वनगरः॥ सप्रमोदं

मदभिलसितभाजनं भूयाः॥

---

*) धर्मो न इष्टो बहुदुःखचेष्टो मोक्षेण सौख्यं ममास्ति सत्यं। ग्रर्थः समर्थः सकलं विधातुं ग्रनङ्गसर्वस्वकलानिधानं॥

**) ग्रार्ये विश्वनगरो युष्माकमतिथिरुपस्थितः॥

***) तदुपसर्पामि। भगवन् प्रणामामि।

॥ सुरतप्रिया ॥

*) भग्रवं तुम्हाणं पसादेण ॥

॥ विश्वनगरः ॥

एवमचिरादस्तु ॥

॥ सुरतप्रिया ॥

**) आणवेदु भग्रवं जं मए कादव्वं दाग्रव्वं च ॥

॥ विश्वनगरः ॥

शुभे किमदेयमस्माकं भवत्या। सांप्रतं भिन्नैव तावत्॥

॥ सुरतप्रिया ॥

***) भग्रवं कीदिसी भिक्खा कीदिसीए वेलाए केत्तिआइं ते अणाइं ॥

॥ विश्वनगरः ॥ सहर्षः

श्रूयतां।

मांसं माषपटोलतक्रवडिकावास्तूकशाकं वटः।
संजीवन्यथ मत्स्यमुद्गविदलप्रायः प्रकारोत्करः।
स्वादिष्ठं च पयो घृतं दधि नवं रम्भाफलं शर्करा।
संक्षेपादिति साध्यतां सुवदने भिक्षा मदीया द्रुतं॥

---

*) भगवन् युष्माकं प्रसादेन।

**) आज्ञापयतु भगवान् यद् मया कर्तव्यं दातव्यं च।

***) भगवन् कीदृशी भिक्षा कीदृश्यां वेलायां कियन्ति ते अन्नानि।

॥ सुरतप्रिया ॥ विहस्य स्वगतं

*) हुं एसो महप्पा अप्पविसज्जणजोग्गो ज्जेव देववरस्स पसाएण संपण्णो।

प्रकाशमञ्जलिं बद्धा

**) इदं सरीरं विरहेण जुत्तं।
पाणा तहा धम्मफलेक्कसारा।
सव्वं तुहाअत्तं उदारकित्ति।
का वाहिरे वत्थुणि अत्थि अत्था॥

***) ता अन्तरघरं पविसिअ वीसमीअदु भअवं। अहं उण भिक्खापआरं करोमि।

॥ स्नातकः ॥ सोपहासं

†) भअवं पेक्ख पेक्ख।

संस्कृतमाश्रित्य

पक्वाः कुन्तलराजयः कठकठाक्षामौ कपोलावुभाव्।
एतस्याः स्तनमण्डलं निपतितं शुष्का नितम्बस्थली।
दृक्पातास्मितभाषितैः शिव शिव प्रस्तौति नेत्रोत्सवं।

---

*) हूं एष महात्मा आत्मविसर्जनयोग्य एव देववरस्य प्रसादेन संपन्नः।

**) इदं शरीरं विरहेण युक्तं। प्राणास्तथा धर्मफलैकसाराः। सर्वं त्वदायत्तमुदारकीर्ते। का वाह्यवस्तुनि अस्ति आस्था॥

***) तस्मादन्तरगृहं प्रविश्य विश्राम्यतां भगवान्। अहं पुनर्भिक्षाप्रकारं करोमि॥

†) भगवन् प्रेक्षस्व प्रेक्षस्व॥

किं ब्रूमः करवाम वेति किमियं दुष्टा ज़रत्तापसी ॥

॥ विश्वनगरः ॥

धिङ् मूर्ख किमसाधुजनोचितं प्रलपसि ॥

सुरतप्रियां प्रति ।

शुभे गम्यतां पाकशालां प्रति । वयमप्यागहन्त एवास्महे ॥

॥ सुरतप्रिया ॥

*) जं भग्नवं ग्राणवेदि ॥

इति निष्क्रान्ता ॥

॥ स्नातकः ॥

**) भग्नवं जाव भिक्खा सिज्झदि ताव एत्थ ज्जेव भग्नवं ठिट्ठु । ग्रहं उण ग्रणङ्गसेणिग्राए पउत्तिं जाणिग्र लहुं ग्राग्रहामि ॥

॥ विश्वनगरः ॥

वत्स एहि गम्यतां ॥

इत्युभौ परिक्रामतः

॥ स्नातकः ॥

***) भग्नवं मूलणासग्रणाबिदस्स गेहसंणिहाणे

*) यद्भगवानाज्ञपयति ।

**) भगवन् यावद्भिक्षा सिध्यति तावदत्रैव भगवान् तिष्ठतु । ग्रहं पुनरनङ्गसेनिकायाः प्रवृत्तिं ज्ञात्वा लघु ग्रागछामि ॥

***) भगवन् मूलनाशकनापितस्य गेहसंनिधाने ग्रनङ्गसेनाया वासभवनं । इति

अणङ्गसेणाए वासभवणं त्ति मए सुदं। ता तस्स ज्जेव अणुसारेण अण्णेसम्ह ॥

अग्रतोऽवलोक्य

भअवं पेक्ख पेक्ख। एसा अणङ्गसेणा सुरविलासिणी विअ विलोईअदि ॥

॥ विश्वनगरः ॥

तदागच्छाग्रतः। एनामुपसर्पाव ॥

इत्येकान्ते स्थितौ। ततः प्रविशति अनङ्गसेना

॥ स्नातकः ॥ सहसोपसृत्य

*) भअवं पेक्ख पेक्ख अणङ्गसेणाए लावण्णलच्छिं।
णीलम्भोरुहपत्तकन्तणअणा संपुण्णचन्दाणणा।
उत्तुङ्गत्थणभारभङ्गुरतणू वेइव्व मज्झे किसा।
बाला मत्तगइन्दमन्दगमणा सुन्देरसोहामई।
णूणं पञ्चसरस्स मोहणलआ सिङ्गारसंजीवणी ॥

॥ विश्वनगरः ॥ स्वगतं

---

मया श्रुतं। तस्मात् तस्यैवानुसारेणान्वेषामहे॥ भगवन् प्रेक्षस्व प्रेक्षस्व। एषानङ्गसेना सुरविलासिनीव विलोक्यते ॥

*) भगवन् प्रेक्षस्व प्रेक्षस्वानङ्गसेनाया लावण्यलक्ष्मीं। नीलाम्भोरुहपत्रकान्तनयना संपूर्णचन्द्रानना। उत्तुङ्गस्तनभारभङ्गुरतनुर्वेदिरिव मध्ये कृशा। बाला मत्तगजेन्द्रमन्दगमना सौन्दर्यशोभामयी। नूनं पञ्चशरस्य मोहनलता शृङ्गारसंजीवनी ॥

यन्नेत्राञ्जनभङ्गिलङ्गिममयस्मेराननाम्भोरुहा।
यत् साकूतकलाविलासवसतिर्यत् कान्तरोमोद्गमा।
मद्भावेङ्गितसंगतिं तनुलतामालोक्य गोपायति।
प्रायस्तत् कथयत्यनङ्गरचनामङ्के कृशाङ्गी स्थितां॥

प्रकाशं

सम्यगुपलक्षितं। तथा हि

यत् तीर्थाम्बु मुखाम्बुजासवरसो नेत्रे नवेन्दीवरे।
दन्तश्रेणिनखास्तताक्षतचयो दूर्वा च रोमावली।
उत्तुङ्गं च कुचद्वयं फलयुगं पत्रं कराम्भोरुहं।
तन्मन्ये मदनार्चनाहितमतिः स्वाङ्गोपहारैरियं॥

अनङ्गसेनां लक्षीकृत्य

यत् पूर्वं रचितं तपः प्रतिदिनं या तीर्थयात्रा कृता।
यद्भूम्ना पुरुषोत्तमार्चनविधौ चेतः कृतार्थीकृतं।
तस्यैतत् परमप्रमोदजनकं प्राप्तं फलं कर्मणाम्-।
तत् किं शास्त्रकथारसेन किमहो स्वर्गेण मोक्षेण वा॥

इति कायावस्थां नाटयति

॥ स्नातकः ॥ सहर्षवैराग्यं स्वगतं

*) एसो लम्पडो उन्दुरुविग्गरे सप्पो विग्र पइट्ठो।

---

*) एष लम्पट उन्दुरुविवरे सर्प इव प्रविष्टः। भवतु। युक्तिप्रधानैर्वचनैर्निवारयिष्यामि॥ भगवन् त्वमुपेक्षितसंसारसौख्यो मोक्षैकपरायणः कथं एतादृशे मृगतृष्णासदृशे मदनरसे पतित्वा आत्मानं व्यापादयसि। निवर्त्यतां अस्माद् दुष्टगणिकाप्रसङ्गादिति॥

भोदु। जुत्तिपक्खाणेहिं वअणेहिं णिवारइस्सं ॥

प्रकाशं

भगवं तुमं उवेक्खिदसंसारसोक्खो मोक्खेक्कपराअणो कधं एआरिसे मअतिण्हासरिसे मअणरसे पलिअ अप्पाअणं वाबादेसि। णिअत्तीअदु इमादो दुट्ठगणिआपसंगादो त्ति ॥

॥ विश्वनगरः ॥ सावज्ञं

वत्स नैवं पश्यसि

यावद्दृष्टिर्मृगाक्षीणां न नरीनर्ति भङ्गुरा।
तावज्ज्ञानवतां चित्ते विवेकः कुरुते पदं ॥

॥ अनङ्गसेना ॥ विहस्य

*) भअवं धणाधीणो क्खु अअं जणो। एत्थ अरण्णरुदिअं कदुअ अप्पाणअं विडम्बेसि ॥

॥ विश्वनगरः ॥

संन्यासिनामस्माकं कुतोऽर्थसंपत्तिः। तदस्मच्छरीरेण यथासुखं विनियोगः क्रियतां।

सानुरागं

बाले मृणालदलकोमलवाहुदण्डे।

---

*) भगवन् धनाधीनः खलु अयं जनः। अत्र अरण्यरुदितं कृत्वात्मानं विडम्बसि ॥

चण्डि प्रचण्डवदने मयि देहि दृष्टिं।
एष त्वदीयवदनाम्बुजकृष्टचेता।
दीनो यतिः सपदि मज्जति कामसिन्धौ ॥

॥ स्नातकः ॥

भो भअवं तुमं उपेक्खिअदसंसारसोक्खो

इत्यादि पठति

॥ अनङ्गसेना ॥ संस्कृतमाश्रित्य

भगवन्नलमत्रात्यन्तानुसंधानेन।
वागर्थं परिगृह्य मोक्षपदवीं ध्यायन्ति निर्मत्सराः।
शास्त्रप्रौढकुलीनहीनविषये सर्वत्र साधारणाः।
रागद्वेषममत्वकर्षितधियो वेश्याः सुरा भिक्षवो।
वक्तुं नन्वपि नित्यमित्यहह किं कामार्णवे मज्जसि॥

॥ विश्वनगरः ॥

प्रिये गृहाणास्मच्छरीरं॥

इत्यञ्चले धारयति

॥ स्नातकः ॥ सहसोपश्रित्य

*) अरे णट्ठपरलोआ दुट्ठपरिव्वाअआ एसा पढमं अम्हपरिग्गहेण तुह पुत्तबहू होदि। ता मुञ्च एणं।

---

*) अरे नष्टपरलोक दुष्टपरिव्राजक एषा प्रथममस्मत्परिग्रहेण तव पुत्रवधूर्भवति। तस्माद् मुञ्चैनां॥

॥ विश्वनगरः ॥

धिङ् मूर्ख एषास्मद्वधूस्त्वद्गुरुपत्नी मातृतुल्या च। तत् किमेनामनुबध्नासि ॥

॥ स्नातकः ॥ सक्रोधं

*) अरे रे लम्पडा एवं एवं भणन्तस्स दण्डप्पहारेण पक्कमालूरफलं विअ मुण्डं दे खण्डं करइस्सं ॥

इत्यन्योन्यं कलहं कुरुतः

॥ अनङ्गसेना ॥ स्वगतं

**) कधं धुत्तहत्थपलिदम्हि। भोदु एवं ताव ॥

प्रकाशं

भो महाभाअधेआ तुम्हाणं एआरिसे महाविवादे असच्चजाइमिस्सो पमाणीकरीअदु ॥

॥ विश्वनगरः ॥

प्रिये भवतु ॥

॥ स्नातकः ॥

***) पिए दसटङ्का मए दादव्वा। ता तं गेण्हिअ मह मणोहरं संपादेहि ॥

---

*) अरे रे लम्पट एवं एवं भणतो दण्डप्रहारेण पक्कमालूरफलमिव मुण्डं तव खण्डशः करिष्यामि ॥

**) कथं धूर्तहस्तपतितास्मि। भवतु एवं तावत्। भो महाभागधेयौ युष्माकमेतादृशे महाविवादे असत्यजातिमिश्रः प्रमाणीक्रियतां ॥

***) प्रिये दशटङ्का मया दातव्याः। तस्मात् तद् गृहीत्वा मम मनोहरं संपादय ॥

इति ग्रन्थिं दर्शयति

॥ विश्वनगरः ॥

अलं ग्रन्थिदर्शनेन। आगच्छत। तत्रैव गच्छामः॥

इति निष्क्रान्ताः सर्वे॥

इति प्रथमाङ्कःसंधिः॥

---

ततः प्रविशति असज्जातिमिश्रो विदूषकश्च

॥ असज्जातिमिश्रः ॥

सप्रमोदनं

त्रैलोक्यभोजनं श्रेष्ठं ततोऽपि सुरतोत्सवः।
भोजनं वास्तु वा नास्तु जीवनं सुरतं विना॥

वत्स बन्धुवञ्चक आगच्छाधीष॥

॥ विदूषकः ॥

*) जं मिस्सो आणवेदि॥

॥ असज्जातिमिश्रः ॥

यद्वामावक्त्रपानं यदलसनयनालोकनं केलिरङ्गे।
यः स्यादप्यङ्गसंगः कुचकलससमुत्पीडने वाङ्कभङ्गिः।

---

*) यद् मिश्र आज्ञापयति।

एतत् संसारसारं कुरु निजहृदये निर्विकल्पैककल्पं।
किं ते कार्यं विवादक्कथितजडमतिग्रन्थकन्थाभरेण॥

॥ विदूषकः ॥

*) भो मिस्स पराङ्गणासंभोगादो पि परमन्दिरे संधिं कदुअ जं अत्थो अवहरीअदि तं ज्जेव तिहुअणसारं। पेक्ख पेक्ख

किं बाणिज्जेण कज्जं णिअधणविलअं तं कखु काऊण दुक्खं।
किंवा कज्जं किसीए पसुवसुणिअमाआसणिक्कज्जदाए।
किं विज्जाए फलं वा मरणसमसमुप्पणचिन्ताउलाए।
एक्कं तेल्लोअसारं परधणहरणं जूअकीलासुहं च॥

ता एत्थ धुत्तउरणअरे जादिसो तुमं गुरू तादिसो अहं सिस्सो संवुत्तो॥

॥ असज्जातिमिश्रः ॥

अहो अस्मिन् नगरे निरुपधिजीवनतास्मद्विधश्रो-

---

*) भो मिश्र पराङ्गनासंभोगादपि परमन्दिरे संधिं कृत्वा यदर्थोऽपह्रियते तदेव त्रिभुवनसारं। प्रेक्षस्व प्रेक्षस्व। किं बाणिज्येन कार्यं निजधनविलयं तं खलु कृत्वा दुःखं। किं वा कार्यं कृष्या पशुवसुनियमायासनिष्कार्यतया। किं विद्यायाः फलं वा मरणाश्रमसमुत्पन्नचिन्ताकुलायाः। एकं त्रैलोक्यसारं परधनहरणं द्यूतक्रीडासुखं च॥ तदत्र धूर्तपुरनगरे यादृशस्त्वं गुरुस्तादृशोऽहं शिष्यः संवृत्तः॥

त्रियाणां। दिनाष्टतयादारभ्य न कश्चिन्न्यायवादी न कपटश्राद्धप्रतिलम्भो न च गणिकालापः ॥

॥ नेपथ्ये ॥

विज्ञाप्यतां मिश्रस्य स्थाने न्यायकरणार्थं वादिनौ द्वारि वर्तेते ॥

॥ असज्ज्ञातिमिश्रः ॥

वत्स बन्धुवञ्चक प्रवेशय वादिनौ।

विदूषको निष्क्रम्य विष्णुनगरस्नातकाङ्गसेनाभिः सह पुनः प्रविशति।

॥ असज्ज्ञातिमिश्रः ॥ विष्णुनगरस्नातकौ निरीक्ष्य स्वगतं

कथमनर्थान्तरमापतितं ॥

प्रकाशं

भगवन्नागन्तुका वयं। तन्नात्र भिक्षावसरः।

॥ विदूषकः ॥

*) भो मिस्स एदे ज्जेव वादिणो। एदाणं विवादं विचारेदु मिस्सो ॥

॥ असज्ज्ञातिमिश्रः ॥ सहर्षं सगौरवं च

आसनमुपनीयतां भगवते स्नातकाय च ॥

विदूषकस्तथा कृत्वा सर्वान् उपवेशयति

॥ असज्ज्ञातिमिश्रः ॥

कोऽर्थी कः प्रत्यर्थी ॥

---

*) भो मिश्र एतावेव वादिनौ। एतयोर्विवादं विचारयतु मिश्रः ॥

॥ स्नातकः ॥

*) भासाए अहं अत्थी णिअरकरणे भअवं ॥

॥ असज्जातिमिश्रः ॥

न्यायवादिनः प्रथमतो निकरः पश्चाद्भाषोत्तरे ॥

॥ विश्वनगरः ॥

अयमस्मत्संन्यासदण्डो निकरः ॥

॥ स्नातकः ॥

**) एदं मे इन्दासणकोलिअं णिअरकरणे पविणीअदु॥

॥ असज्जातिमिश्रः ॥ सगौरवं गृहीत्वा सप्रमोदमाघ्राय

किंचिद्विनिगुद्यते निद्राकरं दोषविनाशहेतु ।
क्षुधाकरं बुद्धिविकाशकं च ।
इन्द्राशनं कामबलानुकूलं ।
लब्धं मया दैववशादिदानीं ॥

॥ विश्वनगरः ॥

स्वाधीनयौवना सुभ्रूः सा मान्या सर्वकामिनां ।
अस्माभिरियमाक्रान्ता मदीया तेन वल्लभा ॥

॥ असज्जातिमिश्रः ॥ भाषां भूमौ लिखित्वा स्नातकं प्रति

स्नातक सत्वरमुत्तरं कुरु ॥

---

*) भाषायामहमर्थी निकरकरणे भगवान् ।

**) इदं मे इन्द्राशनकौलिकं निकरकरणे प्रविनीयतां ।

॥ स्नातकः ॥

*) एसा पुव्वं मए दिट्ठा दाऊण दसटङ्कआ ।
आणीदा अ मदिं दाइं मदीआ तेन वल्लहा ॥

॥ असज्जातिमिश्रः ॥

उत्तरमभिलिख ॥

॥ विदूषकः ॥

**) भो मिस्स पेक्ख पेक्ख अणङ्गसेणाए लावण्णलच्छिं ।
मअलञ्छणबिम्बफुरन्तमुही ।
णअणुप्पलचञ्चलकेलिणिही ।
थणभारणआ अइमज्झकिसा ।
पढमोदिअचन्दकलासरिसा ॥

॥ असज्जातिमिश्रः ॥ अनङ्गसेनामालोक्य

अहो निर्माणवैदग्धी विधातुः । तथा हि
नीलोल्लसल्ललितखञ्जनमञ्जुनेत्रा ।
संपूर्णशारदकलानिधिकान्तवक्त्रा ।
बाला जगत्त्रितयमोहनदिव्यमूर्तिर्-।

---

*) एषा पूर्वं मया दृष्टा दत्वा दशटङ्कान् । आनीता च मतिं दयितां मदीया तेन वल्लभा ॥

**) भो मिश्र प्रेक्षस्व प्रेक्षस्वानङ्गसेनाया लावण्यलक्ष्मीं ।
मृगलाञ्छनबिम्बस्फुरन्मुखी । नयनोत्पलचञ्चलकेलिनिधिः ।
स्तनभारनतातिमध्यकृशा । प्रथमोदितचन्द्रकलासदृशा ॥

मन्ये विभाति जगति स्मरधीरकीर्तिः ॥

भो वादिनौ एषा विवादाध्यासितानङ्गसेना जयपराजयं यावत् मध्यस्थस्थाने स्थाप्यतां। एवंविधे च माध्यस्थ्ये वयमेव नृपतिव्यवस्थिता मध्यस्थाः।

अनङ्गसेनामानीय स्वसंनिधावुपवेश्य तदीयकरं हृदये निधाय सप्रमोदं

विकचकमलकोषश्रीरियं काम्यभूतिर्-।
हिमकरकरजाताचन्द्रकान्ताद्धि शीतः।
मृगमदघनसारासंगसौरभ्यभव्यो।
हरति मदनतापं कोमलः पाणिरस्याः ॥

क्षणं विचार्य उच्चैर्विहस्य

भो वादिनौ एतद्राज्यनेत्रे भुजङ्गयोरिव युवयोर्विवादः॥ तथा हि

नैषा त्वदीया भवतोऽपि नेयं।
मत्संनिधिष्ठा सुभगा मदीया।
स्वप्नेऽपि पूर्वं मयि जातकेलिस्-।
ततोऽपि हेतोः खलु वल्लभा मे ॥

॥ विदूषकः ॥ अनङ्गसेनामालोक्य जनान्तिकं

*) भो सुन्दरि एसो मिस्सो वुड्ढो भग्गवं णिद्धणो

---

*) भो सुन्दरि एष मिश्रो वृद्धो भगवान् निर्धनः स्नातक इकारचनः।

सिणादम्रो इछारम्रणो। ता एदाणं समागमं परिहृरिम्र अम्हसमागमेण तुह्म जोव्वणं सफलं भोदु ॥

इत्यात्मानं दर्शयति

॥ अनङ्गसेना ॥ सस्मितं

*) एदं धुत्तसमागमपहसणं संवुत्तं ॥

॥ विश्वनगरः ॥ सवैराग्यं

वत्स दुराचार न हि जलौकसामङ्गे जलौका लगति। मूलनाकस्यायं विचारः। तदेहि सुरतप्रियाया एव भवनं गछाव ॥

इति निष्क्रान्तौ। ततः प्रविशति अपटीक्षेपेण मूलनाशकः

॥ मूलनाशकः ॥

**) अले अले अणङ्गशेणिए जाणिदे तुम्ह चलिदं जं वालं वालं कम्रमम्रणमन्दिलकवौलवेदणं पत्थन्ते बहुवालं हग्गे तए पम्राशिदे। ता शंपदं पम्रछ। अणधा लाम्रदोह्राइं दाव दाइश्शं ॥

---

तस्मादेतेषां समागमं परिहृत्य अस्मत्समागमेन तव यौवनं सफलं भवतु ॥

*) एतत् धूर्तसमागमप्रहसनं संवृत्तं ॥

**) अरे अरे अनङ्गसेनिके ज्ञातं तव चरितं यद् वारं वारं कृतमदनमन्दिरचौरवेतनं प्रार्थयन् बहुवारमहं त्वया प्रकाशितः ॥ तस्मात् सांप्रतं प्रयछ। अन्यथा राजद्विधानि तव दास्यामि ॥

॥ अनङ्गसेना ॥

*) मूलनासग्र संपदं ज्जेव असज्जाइमिस्सादो तुह दाइस्सं। ता सुत्थो होहि ॥

॥ विदूषकः ॥

**) को एसो दुट्ठदंसणो दुट्ठचरिदो दुट्ठवग्रणो ॥

॥ असज्जातिमिश्रः ॥

एष किं भगवद्गोचरः। पश्य
छिन्नौष्ठनासो गलगण्डनम्रो।
वामाक्षिकाणो गलितैकहस्तः।
शिलीपदव्यापृतदक्षिणाङ्घ्रिः।
स मूलनाशः किल नापितोऽसौ ॥

मूलनाशकः सहसोपसृत्य सर्वेषां सप्रमाणमादर्शं दर्शयति

॥ असज्जातिमिश्रः ॥

मूलनाशक क्रियतामस्माकं नखलोम्नां परिष्कारः॥

॥ मूलनाशकः ॥

***) पठमं वेदनं पग्रह ॥

---

*) मूलनाशक सांप्रतमेव असज्जातिमिश्रात् तव दास्यामि। तस्मात् सुस्थो भव ॥

**) क एष दुष्टदर्शनो दुष्टचरितो दुष्टवचनः ॥

***) प्रथमं वेतनं प्रयच्छ।

॥ असज्जातिमिश्रः ॥

मूलनाशक किमर्थं ॥

॥ मूलनाशकः ॥

*)भो जदि तुमं पलिक्खलन्ते पठमं ज्जेव मलिश्शशि ता वेदनं किण पइछिदव्वं ॥

॥ असज्जातिमिश्रः ॥

अलं परिहासेन। गृह्यतामिदं पारितोषिकं ॥

इति कौलिकादाकृष्य गङ्गाकिनीं ददाति। मूलनाशकः सगौरवं गृहीत्वा सप्रमोदं आघ्राय किंचिद्विनियुज्य च मिश्रस्य करचरणयोर्बन्धनं कृत्वा व्यापारं नाटयति

॥ असज्जातिमिश्रः ॥ सवेदनं

दलति हृदयमेतन्मोहमभ्येति चेतः।
स्फुटति सकलदेहे कीकसग्रन्थिसंधिः।
विरम विरम शिल्पान्मूलनाश त्वमस्मात्।
शिव शिव शिव सद्यो जीवनं कुप्यतीव ॥

इति मोहमुपागतः

॥ मूलनाशकः ॥ चालयित्वा

**)कधं मलिदे अशज्जाइमिश्शे लहु लहु अवक्कमिश्शं॥

इति निष्क्रान्तः

---

*) भो यदि त्वं परिस्खलन् प्रथमं मरिष्यसि तदा वेतनं केन प्रयन्तव्यं॥

**) कथं मृतोऽसज्जातिमिश्रः। लघु लघु अपक्रमिष्यामि।

॥ विदूषकः ॥ मिश्रस्य करचरणयोर्बन्धनमपनीय

*)भो अाणवेदु मिस्सो अवरं क्खु तुह पिअं णिव्वाहइस्सं॥

॥ असज्ञातिमिश्रः ॥ संज्ञां लब्ध्वा

राष्ट्रं समस्तं कपटेन भुक्तं ।
धूर्तक्रियाभिर्दयितेयमाप्ता ।
भवान् विनीतो मिलितश्च शिष्यः ।
नातः परं नः प्रियमस्ति लोके ॥

तथापीदमस्तु ।

काले संततवर्षिणो जलमुचः शस्यैः समृद्धा धरा ।
भूपाला निजधर्मपालनपरा विप्रास्त्रयीनिर्भराः ।
स्वादुक्षीरनतोधसः प्रतिदिनं गावो निरस्तापदः ।
सन्तः शान्तिपरा भवन्तु कृतिनः सौजन्यभाजो जनाः॥

इति निष्क्रान्ताः सर्वे ॥

इति श्रीकविशेखराचार्यज्योतिरीश्वरविरचितं धूर्तसमागमं नाम प्रहसनं समाप्तं॥

---

*) भो आज्ञापयतु मिश्रः। अपरं खलु तव प्रियं निर्वाहयिष्यामि॥

# HYMNI E RIGVÊDA.

## BHARADVÂG'AE HYMNUS IN AURORAM.

उदु श्रिय उषसो रोचमाना अस्थुरपां नोर्मयो रुशन्तः।
कृणोति विश्वा सुपथा सुगान्यभूदु वस्वी दक्षिणा मघोनी ॥
भद्रा ददृक्ष उर्विया विभास्युत् ते शोचिर्भानवो द्यामपप्तन्।
आविर्वक्षः कृणुषे शुम्भमानोषो देवि रोचमाना महोभिः ॥
वहन्ति सीमरुणासो रुशन्तो गावः सुभगामुर्विया प्रथानां।
अपेजते शूर अस्तेव शत्रून् बाधते तमो अजिरो न वोल्हाः ॥
सुगोत ते सुपथा पर्वतेष्ववाते अपस् तरसि स्वभानो।
सा न आवह पृथुयामन्नृष्वे रयिं दिवो दुहितरि-षयध्यै ॥

सावह्योक्षभिरवातोषो वरं वहसि जोषमनु ।
त्वं दिवो दुहितर्या ह देवी पूर्वहूतौ मंहना दर्शताभूः ॥
उत् ते वयश्चिद्वसतेरपतन् नरश्च ये पितुभाजो व्युष्टौ ।
अमा सते वहसि भूरि वाममुषो देवि दाशुषे मर्त्याय ॥

---

## ÂTRÊYAE HYMNUS IN AGNIM.

त्वामग्ने हविष्मन्तो देवं मर्तास ईलते ।
मन्ये त्वा जातवेदसं स हव्या वक्ष्यानुषक् ॥
अग्निर्होता दास्वतः क्षयस्य वृक्तवर्हिषः ।
सं यज्ञासश्चरन्ति यं सं वाजासः श्रवस्यवः ॥
उत स्म यं शिशुं यथा नवं जनिष्टारणी ।
धर्तारं मानुषीणां विशामग्निं स्वध्वरं ॥
उत स्म दुर्गृभीयसे पुत्रो न ह्वार्याणां ।
पुरू यो दग्धासि वनाग्ने पशुर्न यवसे ॥
अध स्म यस्यार्चयः सम्यक् संयन्ति धूमिनः ।
यद् ईमह त्रितो दिव्युप ध्मातेव धमति शिशीते ध्मातरी यथा ॥
तवाहमग्न ऊतिभिर्मित्रस्य च प्रशस्तिभिः ।

द्वेषोयुतो न दुरिता तुर्याम मर्त्यानां ॥
तं नो अग्ने अभी नरो रयिं सहस्व आभर।
स क्षेपयत् स पोषयद्भुवद्वाजस्य सातय उतैधि पृत्सु
नो वृधे ॥

---

## VIÇVÂMITRAE HYMNUS IN SOLEM.

इयं ते पूषन्नघृणे सुष्टुतिर्देव नव्यसी।
अस्माभिस्तुभ्यं शस्यते ॥
तां जुषस्व गिरं मम वाजयन्तीमवा धियं।
वधूयुरिव योषणां ॥
यो विश्वाभिविपश्यति भुवना सं च पश्यति।
स नः पूषा विता भुवत् ॥

---

तत् सवितुर्वरेण्यं भर्गो देवस्य धीमहि।
धियो यो नः प्रचोदयात् ॥
देवस्य सवितुर्वयं वाजयन्तः पुरन्ध्या।
भगस्य रातिमीमहे ॥
देवं नराः सवितारं विप्रा यज्ञैः सुवृक्तिभिः।
नमस्यन्ति धियेषिताः ॥

## VASISTHAE HYMNUS IN AGNIM.

उपसद्याय मीळ्हुषे आस्ये जुहुता हविः ।
यो नो नेदिष्ठमाप्यं ॥
यः पञ्चचर्षणीरभिनिषसाद् दमे दमे ।
कविर्गृहपतिर्युवा ॥
स नो वेदो अमात्यमग्नी रक्षतु विश्वतः ।
उतास्मान् पात्वंहसः ॥
नवं नु स्तोममग्नये दिवः श्येनाय जीजनं ।
वस्वः कुविद्वनाति नः ॥
स्पार्हा यस्य श्रियो दृशे रयि वीरवतो यथा ।
अग्ने यज्ञस्य शोचतः ॥
सेमं वेतु वषट्कृतिमग्निर्जुषत नो गिरः ।
यजिष्ठो हव्यवाहनः ॥
नि त्वा नक्ष्य विश्पते द्युमन्तं देव धीमहि ।
सुवीरमग्न आहुत ॥
क्षप उस्रश्च दीदिहि स्वग्नयस्त्वया वयं ।
सुवीरस्त्वमस्मयुः ॥
उप त्वा सातये नरो विप्रासो यन्ति धीतिभिः ।
उपाक्षरा सहस्रिणी ॥

अग्नी रक्षांसि सेधति शुक्रशोचिरमर्त्यः ।
शुचिः पावक ईड्यः ॥

---

## VASIS'THAE HYMNUS IN AGNIM.

एना वो अग्निं नमसोर्जो नपातमाहुवे ।
प्रियं चेतिष्ठमरतिं स्वध्वरं विश्वस्य दूतममृतं ॥
स योजते अरुषा विश्वभोजसाः स दुद्रवत् स्वाहुतः ।
सुब्रह्मा यज्ञः सुशर्मा वसूनां देवं राधो जनानां ॥
उदस्य शोचिरस्थादाजुह्वानस्य मीळ्हुषः ।
उद्धूमासो अरुषासो दिविस्पृशः समग्निमिन्धते नरः ॥
तं त्वा दूतं कृण्महे यशस्तमं देवाना वीतये वह ।
विश्वा सूनो सहसो मर्तभोजना रास्व तद्यत्
त्वेमहे ॥
त्वमग्ने गृहपतिस्त्वं होता नो अध्वरे ।
त्वं पोता विश्ववार प्रचेता यक्षि वेषि च वार्यं ॥
कृधि रत्नं यजमानाय सुक्रतो त्वं हि रत्नधा असि ।
आ न ऋते शिशीहि विश्वमृत्विजं सुशंसो यश्च दक्ष ते ॥

---

## VASISTHAE HYMNUS IN DEUM PLUVIUM.

पर्जन्याय प्रगायत दिवस्पुत्राय मीळ्हुषे ।
स नो यवसमिच्छतु ॥
यो गर्भमोषधीनां गवां कृणोत्यर्वतां ।
पर्जन्यः पुरुषीणां ॥
तस्मा इदास्ये हविर्जुहोता मधुमत्तमं ।
इलां नः संयतं करत् ॥

---

## AD AGNIM.

समिधा जातवेदसे देवाय देवहूतिभिः ।
हविर्भिः शुक्रशोचिषे नमस्विनो वयं दाशेमाग्नये ॥
वयं ते अग्ने समिधा विधेम वयं दाशेम सुष्टुती यजत्र ।
वयं घृतेनाध्वरस्य होतर्वयं देव हविषा भद्रशोचे ॥
आ नो देवेभिरुप देवहूतिमग्ने याहि वषट्कृतिं जुषाणः ।
तुभ्यं देवाय दाशत स्याम यूयं पात स्वस्तिभिः सदा नः ॥

# CONSPECTUS METRORUM.

---

I. *Çlôcus epicus, Anustubʿ* proprio nomine dictus. Distichon est, cuius versus uterque sibi par caesura in duo dividitur hemistichia dissimilia; primum totius çlôci hemistichium par est tertio, secundum quarto. Quodque hemistichium octonas continet syllabas, quarum quaternae priores magnam admittunt pedis variationem, quaternae posteriores in hemm. 1mo et 3tio plerumque hanc formam praebent: ⏑ — — ⏒, rarius hancce: — ⏑ ⏑ ⏓, longe rarius alias; in hemm. 2do et 4to quaternae syllabae posteriores semper hunc sequuntur numerum: ⏑—⏑⏓. Schema itaque vulgatissimum hoc est:

. . . . | ⏑——⏒ | . . . . | ⏑—⏑⏓ |
. . . . | ⏑——⏒ | . . . . | ⏑—⏑⏓ ||

Accuratior expositio ab hoc loco aliena est. Pertinet çlôcus epicus ad antiquissima versuum genera, qui ad severiores leges nondum revocati fuerant.

II. *Monoschematica* metra sunt ea, quorum singulis versibus iidem pedes eodem ordine sine ulla variatione revertuntur. Disticha etiam haec sunt, in binos versus divisa; singuli versus binis constant hemistichiis, quae plerumque inter se paria sunt; quod quum fiat (et fit semper in metris huius libelli monoschema-

ticis) oritur tetrastichon e quatuor partibus prorsus paribus conflatum. Sufficit itaque formas hemistichiorum exhibere.

*a*) Metrum, cui nomen *Indravag'ra;* schema hoc: ⏓—⏑— —⏑⏑— ⏑—⏓ |

Cf. p. 27, 1-2; p. 31, 13-16; p. 78, 8-11; p. 80, 5-8; p. 90, 10-13; p. 92, 13-16; p. 94, 8-11; p. 96, 4-7.

*b*) *Vançast'a*, cuius hemistichium: ⏓—⏑— —⏑⏑— ⏑—⏑⏓ |

Cf. p. 7, 17-20; tum Rit. San. distt. 1-21.

*c*) *Tôt'aka*, cuius schema: ⏑⏑— ⏑⏑— ⏑⏑— ⏑⏑— |

Cf. p. 91, 8-11.

*d*) *Vasantatilaka*, huius schematis: —— ⏑— ⏑⏑⏑— ⏑⏑— ⏑—— |

Cf. p. 1, 3-6; p. 25, 9-11; 19-20 et p. 26, 1-2; p. 44, 10-13; p. 67, 20 et p. 68, 1-3; p. 70, 9-12; p. 74, 16-17 et p. 75, 1-2; p. 84, 18 et p. 85, 1-3; p. 91, 14-18 et p. 92, 1.

*e*) *Mâlinî*, cuius hemistichium: ⏑⏑⏑⏑⏑⏑—— || —⏑——⏑—— |

P. 24, 14-17; p. 64, Rit. San. distt. 22 seqq.; p. 69, 7-10; p. 71, 3-6; p. 92, 6-9; p. 95, 12-15.

*f*) *Çik'arin'î:* ⏑————— || ⏑⏑⏑⏑⏑— —⏑⏑⏑— |

Per signum || indicavi hypotmesin cuiusque versus. cf. p. 6, 14-17.

*g*) *Mandakrânta:* ———— || ⏑⏑⏑⏑⏑— || —⏑——⏑—— |

Cf. p. 29, 18-20 et p. 30, 1.

*h*) *Çârdûlavikrîd'ita:* ———⏑⏑—⏑—⏑⏑⏑— || ——⏑——⏑— |

Cf. p. 11, 12-15; p. 15, 9-12; p. 20, 20 et p. 21, 1-3; p. 35, 14-17; 19-20 et p. 36, 1-2; p. 66, 8-11; 14-17; p. 67, 1-4; 15-18; p. 68, 12-15; p. 73, 13-16; p. 74, 1-4; p. 76, 4-7; p. 77, 2-5; p. 79, 14-17; p. 80, 14-17 et p. 81, 1; p. 82, 11-14; p. 83, 1-4; 7-10; 12-15; p. 85, 9-12; p. 96, 9-12.

*i*) *Sragďara:* — — — — ◡ — — ‖ ◡ ◡ ◡ ◡ ◡ ◡ — ‖ — ◡ — — ◡ — — |

Cf. p. 66, 3-6; p. 71, 10-13; 15-16 et p. 72, 1-2; 10-13; p. 87, 15-16 et p. 88, 1-2; 7-11.

III. *Metra polyschematica.* Versus sunt, quorum pedes non numero, sed pondere syllabarum scanduntur. Cuique pedi pondus esse solet quaternarum morarum sive syllabarum brevium; id genus pedum omnes praebent polyschematici versus per hunc libellum. Praevalent tales versus in carminibus Prâcriticis, quamvis nonnulla huiusmodi metra etiam in Sanscriticam linguam adscita sunt, sicuti altera ex parte metra monoschematica aevo seriori ad versus Prâcriticos accommodantur; originitus monoschematici versus recitationi (पाठ्य), polyschematici canticis proprii fuisse videntur. Pedes quaternarum morarum hunc in modum variari possunt: ◡ ◡ ◡ ◡, — ◡ ◡, ◡ ◡ —, — —, ◡ — ◡. Quae pedum variationes pro metrorum diversitate aut ad certas quasdam versus cuiusvis sedes restringuntur aut ubique locum habere possunt. Etiam numerus pedum in singulis versibus magnopere variatur et praeter disticha quaternario versuum numero constantia, quae praevalet in poesi Sanscritica strophae forma, alia in-

veniuntur, ex diverso versuum numero conflata; quo fit, ut maxima oriatur tum versuum, tum distichorum varietas.

Hisce praemissis exhibebo ea huius generis metra, quae in nostro libello exstant:

*a*) Vulgatissimum metrum est Ârjâ, cuius tamen duo tantum exempla leguntur p. 31, 17-20. ad hancce mensuram redigenda:

⏑⏑— | —⏑⏑ | ⏑—⏑ ‖ ⏑⏑⏑⏑ | — — | ⏑—⏑ | — — | ⏑ |
⏑⏑⏑⏑ | ⏑—⏑ | — — ‖ —⏑⏑ | — — | ⏑ | — — | ⏑ ‖

Sunt disticha hemistt. quaternum; hemm. 1. et 3. tribus consistunt pedibus, hemm. 2 et 4. quinis acatalecticis; hem. 2. in sede tertia amphibrachyn praebere solet, admittit etiam procelcusmaticum, non alios pedes; hem. 4. pes tertius una syllaba efficitur. Ceteri pedes haud paucas patiuntur variationes, quas h. l. enumerare non attinet.

*b*) Distichon p. 70, 1-4. huius mensurae:

—⏑⏑ | —⏑⏑ | —⏑⏑ | — — ‖ ⏑⏑⏑⏑ | ⏑⏑⏑⏑ | —⏑⏑ | — — |
⏑⏑⏑⏑ | —⏑⏑ | —⏑⏑ | — — ‖ ⏑⏑— | — ⏑⏑ | —⏑⏑ | — — ‖

Continet itaque hemistichium quodvis quatuor pedes catalecticos, in quibus praevalet forma dactylica.

*c*) P. 69, 12-17. Stropha est versuum octo, quorum quatuor priores quaternis anapaestis consistunt, quatuor posteriores ad Arjae mensuram quadrant. Schema hoc est:

⏑⏑— | ⏑⏑— | ⏑⏑— | ⏑⏑— ‖ ⏑⏑— | ⏑⏑— | ⏑⏑— | ⏑⏑— |
⏑⏑— | ⏑⏑— | ⏑⏑— | ⏑⏑— ‖ ⏑⏑— | ⏑⏑— | ⏑⏑— | ⏑⏑— |
— — | ⏑—⏑ | — — ‖ ⏑⏑⏑⏑ | — — | ⏑—⏑ | ⏑⏑— | ⏑ |
— — | ⏑⏑⏑⏑⏑ | — — ‖ ⏑—⏑ | —⏑⏑ | ⏑ | —⏑⏑ | ⏑ ‖

Quum alia absint exempla, de variationibus huius metri nil definire possum.

